# चम्पूरामायणे

# बालकाण्डम्

४३ – २६.११.२०१८

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# मङ्गलम्

- लक्ष्मीं तनोतु नितरामितरानपेक्षम्
- अङ्घ्रिद्वयं निगम-शाखि-शिखा-प्रवालम् ।
- हैरम्बमम्बुरुह-डम्बर-चौर्य-निघ्नम्
- विघ्नाद्रि-भेद-शतधार-धुरन्धरं नः ॥

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# पुनरावर्तनम्

- परशुरामस्य दर्शनम्
- रामं प्रति परशुरामस्य आह्वानम्
- परशुरामस्य गर्वभङ्गः
- चापदण्ड-परशुरामयोः वर्णनम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# ततस्तत्क्षणममोघेन राघवः शरेण भार्गवस्य स्वर्गतिं रुरोध।

- ततः, तत्-क्षणम्, अमोघेन, राघवः, शरेण, भार्गवस्य, स्वर्गतिम्, रुरोध
- ततः = तदनन्तरम्
- राघवः = श्रीरामः
- अमोघेन = अव्यर्थेन
- शरेण = बाणेन

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# ततस्तत्क्षणममोघेन राघवः शरेण भार्गवस्य स्वर्गतिं रुरोध।

- भार्गवस्य = परशुरामस्य
- स्वर्गतिम् = स्वर्लोकगमनं
- तत्क्षणम् = तस्मिन्नेव क्षणे
- रुरोध = अवरुद्धवान्
- तात्पर्य्यम् – झटिति श्रीरामः स्वस्य अव्यर्थेन बाणेन परशुरामस्य स्वर्लोकगमनम् अवरुद्धवान्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

# ततस्तत्क्षणममोघेन राघवः शरेण भार्गवस्य स्वर्गतिं रुरोध।

- इमां पादगतिं राम तपोबलसमार्जितान् । लोकानप्रतिमान् वा ते हनिष्यामि यदिच्छसि ॥
- न ह्ययं वैष्णवो दिव्यश्शरः परपुरञ्जयः। मोघः पतति वीर्येण बलदर्पविनाशनः॥
- काश्यपाय मया दत्ता यदा पूर्वं वसुन्धरा। विषये मे न वस्तव्यमिति मां काश्यपोऽब्रवीत् ॥
- तदिमां त्वं गतिं वीर हन्तुं नार्हसि राघव। मनोजवं गमिष्यामि महेन्द्रं पर्वतोत्तमम्॥

- बालकाण्डम् ७६ सर्गः

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

# ततस्तत्क्षणममोघेन राघवः शरेण भार्गवस्य स्वर्गतिं रुरोध।

- अमोघेन – न मोघः अमोघः, तेन । “मोघं निरर्थकं” (अमरः)
- रुरोध – “रुधिर् आवरणे” – लिट्, प्र.१

# स्थाने हि तत्।

- स्थाने, हि, तत्
- स्थाने = युक्तम् । “युक्ते द्वे सांप्रतं स्थाने” (अमरः)
- हि = निश्चयेन
- तत् = परशुरामस्य स्वर्गतिरोधः

नूनं जनेन पुरुषे महति प्रयुक्त-
मागः परं तदनुरूपफलं प्रसूते।
कृत्वा रघूद्वहगतेः क्षणमन्तरायं
यद्भार्गवः परगतेर्विहतिं प्रपेदे॥११५॥

- नूनम्, जनेन, पुरुषे, महति, प्रयुक्तम्, आगः, परम्, तत्-अनुरूप-फलम्, प्रसूते, कृत्वा, रघूद्वह-गतेः, क्षणम्, अन्तरायम्, यत्-भार्गवः, परगतेः, विहतिम्, प्रपेदे

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

नूनं जनेन पुरुषे महति प्रयुक्तमागः परं तदनुरूपफलं प्रसूते।
कृत्वा रघूद्वहगतेः क्षणमन्तरायं यद्भार्गवः परगतेर्विहतिं प्रपेदे॥११५॥

- नूनम् = निश्चयेन
- प्रसूते = जनयति
- किं प्रसूते? आगः = अपराधः
- कीदृशम् आगः? प्रयुक्तम् = आचरितम्
- कस्मिन् प्रयुक्तम्? महति पुरुषे = महानुभावे

नूनं जनेन पुरुषे महति प्रयुक्तमागः परं तदनुरूपफलं प्रसूते।
कृत्वा रघूद्वहगतेः क्षणमन्तरायं यद्भार्गवः परगतेर्विहतिं प्रपेदे॥११५॥

- केन प्रयुक्तम्? जनेन = केनचित् नरेण
- किं प्रसूते? तदनुरूपफलम् = तस्य अपराधस्य अनुगुणं फलम्
- कीदृशं तदनुरूपफलम्? परम् = अत्यन्तम्
- यत् = यस्मात् कारणात्
- प्रपेदे = प्राप्तवान्
- कः प्रपेदे? भार्गवः = परशुरामः

नूनं जनेन पुरुषे महति प्रयुक्तमागः परं तदनुरूपफलं प्रसूते।
कृत्वा रघूद्वहगतेः क्षणमन्तरायं यद्भार्गवः परगतेर्विहतिं प्रपेदे॥११५॥

- कां प्रपेदे? विहतिम् = हानिम्
- कस्याः विहतिम्? परगतेः = स्वर्लोकप्राप्तेः
- किं विधाय प्रपेदे? कृत्वा = विधाय
- कं कृत्वा? अन्तरायम् = विघ्नम्
- कस्याः अन्तरायम्? रघूद्वहगतेः = श्रीरामगमनस्य
- कियत्कालं कृत्वा? क्षणम् = क्षणमात्रम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

नूनं जनेन पुरुषे महति प्रयुक्तमागः परं तदनुरूपफलं प्रसूते।
कृत्वा रघूद्वहगतेः क्षणमन्तरायं यद्भार्गवः परगतेर्विहतिं प्रपेदे॥११५॥

- अन्वयः – जनेन महति पुरुषे प्रयुक्तम् आगः नूनं परं तदनुरूपफलं प्रसूते, यत् भार्गवः रघूद्वहगतेः क्षणम् अन्तरायं कृत्वा परगतेः विहतिं प्रपेदे ।
- तात्पर्य्यम् – केनचित् नरेण महानुभावस्य विषये विहितः अपराधः निश्चयेन अत्यन्तं तदनुगुणं फलं जनयति । अत एव श्रीरामगमनस्य क्षणमात्रं विघ्नं प्रकल्प्य परशुरामः स्वर्लोकगमनस्य हानिं प्राप्तवान् ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

नूनं जनेन पुरुषे महति प्रयुक्तमागः परं तदनुरूपफलं प्रसूते।
कृत्वा रघूद्वहगतेः क्षणमन्तरायं यद्भार्गवः परगतेर्विहतिं प्रपेदे॥११५॥

- आगः – सकारान्तः, नपुंसकलिङ्गः “आगस्” शब्दः, १.१ । “आगोऽपराधो मन्तुश्च” (अमरः)
- प्रसूते – प्र+ “षूङ् प्राणिगर्भविमोचने” – लट्, प्र.१
- रघूद्वहगतेः – रघूणाम् उद्वहः, रघूद्वहस्य गतिः, तस्याः । “तोकापत्यं च प्रसव-उद्वह-नन्दनः” (कोशः)

नूनं जनेन पुरुषे महति प्रयुक्तमागः परं तदनुरूपफलं प्रसूते।
कृत्वा रघूद्वहगतेः क्षणमन्तरायं यद्भार्गवः परगतेर्विहतिं प्रपेदे॥११५॥

- विहतिम् – वि + "हन हिंसागत्योः" + क्तिन् (कृत्) – इकारान्तः, स्त्री, २.१
- प्रपेदे – प्र+ "पद गतौ" लिट्, प्र.१
- अर्थान्तरन्यासः । "उक्तिरर्थान्तरन्यासः स्यात् सामान्यविशेषयोः" ।
- वसन्ततिलका वृत्तम् ।

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

अथ सङ्क्रान्तया जामदग्न्यशक्तिसम्पदा सम्पन्नं पन्नगपरिवृढभोग-भुजाभिरामं राममविरलमालिङ्ग्य मूर्ध्न्युपाघ्राय दशरथः परिखयेव परिसरे परिसरन्त्या सरयूसरितानुविद्धामयोध्यां दारकान्सदारान् सादरमवलोकयन्तीनां पौरपुरन्ध्रीणां नीरन्ध्रितगवाक्षैः कटाक्षैः सौन्दर्यवञ्चितताापिञ्छैः पिञ्छातपत्रायमाणधवलातपत्रः प्रविवेश।

vyoma ॥ वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# अथ सङ्क्रान्तया...

- अथ, सङ्क्रान्तया, जामदग्न्य-शक्ति-सम्पदा, सम्पन्नम्, पन्नग-परिवृढ-भोग-भुज-अभिरामम्, रामम्, अविरलम्, आलिङ्ग्य, मूर्ध्नि, उपाघ्राय, दशरथः, परिखया, इव, परिसरे, परिसरन्त्या, सरयू-सरिता, अनुविद्धाम्, अयोध्याम्, दारकान्, स-दारान्, सादरम्, अवलोकयन्तीनाम्, पौर-पुरन्ध्रीणाम्, नीरन्ध्रित-गवाक्षैः, कटाक्षैः, सौन्दर्य-वञ्चित-तापिञ्छैः, पिञ्छ-आतपत्रायमाण-धवल-आतपत्रः, प्रविवेश।

vyoma
॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

# अथ सङ्क्रान्तया जामदग्न्यशक्तिसम्पदा सम्पन्नं

- अथ = परशुरामस्य निर्गमनानन्तरम्
- दशरथः
- सङ्क्रान्तया = सङ्गतया
- जामदग्न्यशक्तिसम्पदा = परशुरामस्य तपःप्रभावसम्पत्त्या
- सम्पन्नम् = समृद्धम्

# पन्नगपरिवृढभोगभुजाभिरामं राममविरलमालिङ्ग्य मूर्ध्न्युपाघ्राय

- पन्नगपरिवृढभोगभुजाभिरामम् - पन्नगपरिवृढस्य = भुजगेन्द्रस्य, भोगः = कायः, तत्सदृशाभ्यां भुजाभ्याम् = बाहुभ्याम् अभिरामम् = मनोहरम्
- रामम्
- अविरलम् = गाढम्
- आलिङ्ग्य = आश्लिष्य
- मूर्ध्नि = शिरसि
- उपाघ्राय = आघ्राणं कृत्वा । [शिरसः आघ्राणं वात्सल्यप्रदर्शकम्]

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# दशरथः परिखयेव परिसरे परिसरन्त्या सरयूसरितानुविद्धामयोध्यां

- परिखया इव = जलदुर्गेण इव
- परिसरे = पर्यन्तभुवि
- परिसरन्त्या = प्रवहन्त्या
- सरयूसरिता = सरयूनद्या
- अनुविद्धाम् = आवेष्टिताम्
- अयोध्याम्

# दारकान्सदारान्सादरमवलोकयन्तीनां पौरपुरन्ध्रीणां नीरन्ध्रितगवाक्षैः

- सदारान् = पत्नीसहितान्
- दारकान् = पुत्रान् रामादीन्
- सादरम् = साभिमानम्
- अवलोकयन्तीनाम् = पश्यन्तीनाम्
- पौरपुरन्ध्रीणाम् = नगरस्त्रीणाम्
- नीरन्ध्रितगवाक्षैः = निरन्तरीकृत-गवाक्षमार्गैः

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

## कटाक्षैः सौन्दर्यवञ्चिततापिञ्छैः पिञ्छातपत्रायमाणधवलातपत्रः प्रविवेश।

- सौन्दर्यवञ्चिततापिञ्छैः = रूप-निर्जित-तमालपुष्पैः
- कटाक्षैः = अपाङ्गावलोकनैः
- पिञ्छातपत्रायमाणधवलातपत्रः = बर्हमयच्छत्रम् इव आचरता श्वेतच्छत्रेण युक्तः सन्
- प्रविवेश = प्रविष्टवान्

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# अथ सङ्क्रान्तया...

- तात्पर्य्यम् – भुजगेन्द्रस्य कायसदृशाभ्यां महद्भ्यां बाहुभ्यां मनोहरः श्रीरामः आत्मानं सङ्गतया परशुरामस्य तपःप्रभावसम्पत्त्या समृद्धः । तादृशं पुत्रं दशरथः दृढम् आलिङ्ग्य प्रीत्या शिरसि आघ्रातवान् । ततः ते सर्वे अयोध्यां प्राप्तवन्तः । अयोध्यां परितः सरयूनदी जलदुर्ग इव प्रवहति स्म । तत्र प्रविष्टान् पत्नीसहितान् राजपुत्रान् पौरनार्यः साभिमानं वीक्षितवत्यः । तासां कटाक्षैः गृहाणां गवाक्षाः पूरिताः । किञ्च, तमालपुष्पवत् सुन्दरैः तैः कटाक्षैः दशरथस्य श्वेतातपत्रं बर्हमयच्छत्रम् इव बभूव ।

लज्जावशादविशदस्मरविक्रियाभि-
स्ताभिर्वधूभिरतिवेलमवाप्तसौख्यान्।
इक्ष्वाकुनाथतनयान्प्रथमो रसानां
तारुण्ययोगचतुरश्चतुरः सिषेवे॥११६॥

- लज्जा-वशात्, अविशद-स्मर-विक्रियाभिः, ताभिः, वधूभिः, अतिवेलम्, अवाप्त-सौख्यान्, इक्ष्वाकु-नाथ-तनयान्, प्रथमः, रसानाम्, तारुण्य-योग-चतुरः, चतुरः, सिषेवे

लज्जावशादविशदस्मरविक्रियाभिस्ताभिर्वधूभिरतिवेलमवाप्तसौख्यान्।
इक्ष्वाकुनाथतनयान्प्रथमो रसानां तारुण्ययोगचतुरश्चतुरः सिषेवे॥११६॥

- सिषेवे = सेवितवान्
- कः सिषेवे? रसानां प्रथमः = नवरसेषु आद्यः शृङ्गाररसः
- कीदृशः रसानां प्रथमः? तारुण्ययोगचतुरः = यौवनावस्थायां निपुणः
- कान् सिषेवे? इक्ष्वाकुनाथतनयान् = दशरथपुत्रान्
- कियतः इक्ष्वाकुनाथतनयान्? चतुरः = चतुःसंख्याकान्

लज्जावशादविशदस्मरविक्रियाभिस्ताभिर्वधूभिरतिवेलमवाप्तसौख्यान्।
इक्ष्वाकुनाथतनयान्प्रथमो रसानां तारुण्ययोगचतुरश्चतुरः सिषेवे॥११६॥

- कीदृशान् इक्ष्वाकुनाथतनयान्? अवाप्तसौख्यान् = प्राप्तानन्दान्
- काभिः अवाप्तसौख्यान्? ताभिः वधूभिः = सीतादिभिः नवोढाभिः
- कीदृशीभिः वधूभिः? अविशदस्मरविक्रियाभिः = अस्फुटमन्मथचेष्टाभिः, मुग्धाभिः
- कस्मात् कारणात् अविशदस्मरविक्रियाभिः? लज्जावशात् = त्रपायाः
- कथम् अवाप्तसौख्यान्? अतिवेलम् = अत्यन्तम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

लज्जावशादविशदस्मरविक्रियाभिस्ताभिर्वधूभिरतिवेलमवाप्तसौख्यान्।
इक्ष्वाकुनाथतनयान्प्रथमो रसानां तारुण्ययोगचतुरश्चतुरः सिषेवे॥११६॥

- अन्वयः – लज्जावशात् अविशदस्मरविक्रियाभिः ताभिः वधूभिः अतिवेलम् अवाप्तसौख्यान् चतुरः इक्ष्वाकुनाथतनयान् तारुण्ययोगचतुरः रसानां प्रथमः सिषेवे ।
- तात्पर्य्यम् – सत्रपाभिः मुग्धाभिः नवोढाभिः भार्याभिः सह अत्यन्तम् आनन्दं प्राप्तवतः चतुःसंख्याकान् दशरथतनयान् यौवनावस्थानिपुणः शृङ्गाररसः सेवितवान् । [ते पत्नीभिः सह शृङ्गाररसुखम् अनुभूतवन्तः इत्यर्थः]

लज्जावशादविशदस्मरविक्रियाभिस्ताभिर्वधूभिरतिवेलमवाप्तसौख्यान्।
इक्ष्वाकुनाथतनयान्प्रथमो रसानां तारुण्ययोगचतुरश्चतुरः सिषेवे॥११६॥

- अविशदस्मरविक्रियाभिः – स्मरस्य विक्रियाः, अविशदाः स्मरविक्रियाः यासां ताभिः। “कामः पञ्चशरः स्मरः”(अमरः)
- अवाप्तसौख्यान् – अवाप्तं सौख्यं यैः तान्
- रसानां प्रथमः – “शृङ्गार-वीर-करुण-रौद्र-हास्य-भयानकाः । बीभत्स-अद्भुत-शान्ताख्याः रसाः पूर्वैरुदाहृताः”

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

लज्जावशादविशदस्मरविक्रियाभिस्ताभिर्वधूभिरतिवेलमवाप्तसौख्यान्।
इक्ष्वाकुनाथतनयान्प्रथमो रसानां तारुण्ययोगचतुरश्चतुरः सिषेवे॥११६॥

- तारुण्ययोगचतुरः – तारुण्यस्य योगः, तारुण्ययोगे चतुरः ।
- चतुरः – रेफान्तः पुंलिङ्गः “चतुर्” शब्दः, २.३
- सिषेवे – “षेवृ सेवने” – लिट्, १.१
- वसन्ततिलका वृत्तम्

vyoma
॥ वाचं प्रपद्ये ॥
Samskritam - Value Education

# विद्ययेव त्रयीदृष्ट्या दर्भपत्राग्रधीः सुधीः।
# राजपुत्र्या तया रामः प्रपेदे प्रीतिमुत्तमाम्॥११७॥

- विद्यया, इव, त्रयी-दृष्ट्या, दर्भ-पत्र-अग्र-धीः, सुधीः, राज-पुत्र्या, तया, रामः, प्रपेदे, प्रीतिम्, उत्तमाम्
- प्रपेदे = प्राप्तवान्
- कः प्रपेदे? रामः
- कीदृशः रामः? सुधीः = विद्वान्
- पुनः कीदृशः? दर्भपत्राग्रधीः = कुशाग्रमतिः

विद्ययेव त्रयीदृष्ट्या दर्भपत्राग्रधीः सुधीः।
राजपुत्र्या तया रामः प्रपेदे प्रीतिमुत्तमाम्॥११७॥

- कां प्रपेदे? प्रीतिम् = आनन्दम्
- कीदृशीं प्रीतिम्? उत्तमाम् = परमाम्
- कया प्रपेदे? तया = सीतया
- कीदृश्या तया? राजपुत्र्या = जनकमहाराजस्य दुहित्रा

विद्ययेव त्रयीदृष्ट्या दर्भपत्राग्रधीः सुधीः।
राजपुत्र्या तया रामः प्रपेदे प्रीतिमुत्तमाम्॥११७॥

- कः इव प्रपेदे? सुधीः इव = विद्वान्
- कीदृशः सुधीः? दर्भपत्राग्रधीः = निशितबुद्धिः
- कया इव प्रपेदे? विद्यया = ज्ञानेन
- कीदृश्या विद्यया? त्रयीदृष्ट्या = वेदपर्यालोचनजनितेन

विद्ययेव त्रयीदृष्ट्या दर्भपत्राग्रधीः सुधीः।
राजपुत्र्या तया रामः प्रपेदे प्रीतिमुत्तमाम्॥११७॥

- अन्वयः – दर्भपत्राग्रधीः सुधीः रामः तया राजपुत्र्या त्रयीदृष्ट्या विद्यया इव उत्तमां प्रीतिं प्रपेदे ।
- तात्पर्य्यम् – यथा कश्चित् निशितबुद्धिः विद्वान् वेदपर्यालोचनजनितेन ज्ञानेन परमानन्दं प्राप्नोति, एवं कुशाग्रमतिः श्रीरामः सीतया परमानन्दं प्राप्तवान् ।

vyoma ॥वाचं सुमनस्यामि॥ Samskritam - Value Education - Technology

# विद्ययेव त्रयीदृष्ट्या दर्भपत्राग्रधीः सुधीः।
# राजपुत्र्या तया रामः प्रपेदे प्रीतिमुत्तमाम्॥११७॥

- त्रयीदृष्ट्या – त्रय्याः दृष्टिः, तया । “श्रुतिः स्त्री वेद आम्नायः त्रयी” (अमरः)
- दर्भपत्राग्रधीः – दर्भस्य पत्रम्, दर्भपत्रस्य अग्रम्, दर्भपत्राग्रम् इव धीः यस्य सः । ईकारान्तः, पुं, १.१
- सुधीः – शोभना धीः यस्य सः । ईकारान्तः, पुं, १.१। “विद्वान् विपश्चित् दोषज्ञः सन् सुधीः कोविदो बुधः” (अमरः)
- उपमालङ्कारः, अनुष्टुप् छन्दः

विद्ययेव त्रयीदृष्ट्या दर्भपत्राग्रधीः सुधीः।
राजपुत्र्या तया रामः प्रपेदे प्रीतिमुत्तमाम्॥११७॥

- रामस्तु सीतया सार्धं विजहार बहूनृतून् ।
  मनस्वी तद्गतस्तस्याः नित्यं हृदि समर्पितः ॥
- तस्याश्च भर्ता द्विगुणं हृदये परिवर्तते ।
  अन्तर्जातमपि व्यक्तमाख्याति हृदयं हृदा ॥

"मधुमयफणितीनां मार्गदर्शी महर्षिः" ☺

# सङ्क्षेपः

- सपरिवारस्य दशरथस्य अयोध्यां प्रति आगमनम्
- सभार्याणां रामादीनां सुखप्राप्तिः






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in